अह पुण अविज्जमाणो (णे) सुस्सूसपरे उ उज्जमाविंति ।
तो पच्छित्तं भणियं पयडं ववहारगंथंमि ॥ २२६ ॥

सुगमा, तथा व्यवहारे भणितं—

अणुसट्ठ उज्जमीतिइ विज्जंते चेइयाण सारवए ।
पडिवज्जंते विज्जन्तए गरुया अभत्तीए ॥८॥ इति ॥

ननु तेषां तत्करणे पुण्यं भवति वा न वा ? इत्याह—

होउ व मा होउ वत्ति य पुन्नं तक्कारयाण सव्वन्नू ।
जाणंति ते ववहारओ उ जम्हा इमं वयणं ॥ २२७ ॥

सुबोधा ।

तदेवोक्तद्वयेनाह—

समयविपत्ती सव्वा आणावज्झन्ति भवफला चेव ॥
तित्थयरुद्देसेणवि न तत्तओ सा तदुद्देसा ॥ २२८ ॥

तथा छेदग्रन्थभणितम्—

दुब्भिगंधमलस्सावी तणु रप्पे सण्हाणिया ।
उभओ वाउवहे चेव ते णट्ठंति न चेइए ॥ २२९ ॥

सुगमम् ।

श्रावकाणां पुनस्तत्र किमित्याह—

सड्ढाण पुणो चेइहरं तु जह तह व होउ निप्पन्नं ।
पूइज्जं तं फलयं समयमेयं आगमन्नूणं ॥ २३० ॥

---

१ अथ पुनरविद्यमाने शुश्रूषापरे तु उद्यमयन्ति ।
ततः प्रायश्चितं भणितं प्रकटं व्यवहारग्रन्थे ॥ २२५ ॥

२ अनुशास्तौ उद्यमयन्ति विद्यमाने चैत्यानां सारके ।
प्रतिपद्यमाने विद्यमाने गुरवः अभक्त्या ॥ ८ ॥

व्याख्या-श्रावकाणां-श्राद्धानां, पुनः, चैत्यगृहं-जिनसदनं, तुः पूरणे, यथा तथा वा-पार्श्वस्थादिकृतं श्रावकादिकृतं वा, भवतु, निष्पन्नं-तन्निष्ठां गतं, पूज्यमानमर्च्यमानं, फलदमीप्सितकारि, मतमेतत् सम्मतम्, इदं, आगमज्ञानां-सिद्धान्तविदां, इति गाथार्थः ॥

इति विदिते आत्मनः शिक्षामाह—

रे जीव ! जीववच्छल्ल-कारओ तं सि जइ फुडं ता मा ।
वारेसु सावयजणे इय पूयंते उ चेइहरे ॥ २३१ ॥

व्याख्या-रे जीव !-भो आत्मन्! जीववात्सल्यकारको-भव्यप्राण्युपकारकर्त्ता, त्वमसि-भवसि, यदि, स्फुटं प्रकटं, ततो, 'मा' इति निषेधे, वारय निषेधय, श्रावकजनान श्राद्धलोकान्, इत्येवं, पूजयतो-अर्च्चयमानान. तुः पूर्ववत्, चैत्यगृहान् जिनमन्दिरान्, इति गाथार्थः ॥

पार्श्वस्थकृतजिनभवने पूजाविचार एकत्रिंशत्तमोऽधिकारः ।

द्वात्रिंशमाह—

जो जहवायं न कुणइ इच्चाइ निदंसिऊण अन्नेत्थ ।
सम्मत्तस्साभाव वयंति साहूण सव्वाणं ॥ २३२ ॥

व्याख्या-यो यत्यादिः, यथावादं-यथोक्तं, न करोति-न विदधाति, [ इत्यादि ] निदर्श्य-कथयित्वा, आदिग्रहणात् "मिच्छद्दिट्ठी तओ हु को अन्नो ? वड्ढेइ य मिच्छत्तं परस्स संकं जणेमाणो " इति दृश्यं सुबोधं च । अन्ये अपरे, अत्र--विचारप्रक्रमे, सम्यक्त्वस्य--दर्शनस्य, अभावमसत्तां, वदन्ति--भणन्ति, साधूनां, सर्वेषां निःशेषाणाम, इति गाथार्थः ॥

अत्रोत्तरमाह—

एगंतेणं नेवं जम्हा ववहार--निच्छयनयेहिं ।
सव्वंपि जिणमयं खलु निद्दिट्ठं समयकेऊहिं ॥ २३३ ॥

व्याख्या—एकान्तेन--निश्चयेन, नैवं--नेत्थम्, यस्माद्, व्यवहारनिश्चया-

भ्यां -प्रतीताभ्यां, सर्वमपि निःशेषं जिनमतं--सर्वज्ञागमः, खलु निश्चये, निर्दिष्टं-कथितं, समयकेतुभिः--जिनागमोद्योतकैः, इति गाथार्थः ॥

व्यतिरेकमाह—

जइ पुण नेवं नेयं होज्जा, तो कह णु सबलचारित्ती ।
इगवीसट्ठाणेसु भणिओ एवं दसाईसु ॥ २३४ ॥

व्याख्या–यदि पुनर्नैवं--नयविचारं विना, ज्ञेयमवगन्तव्यं, भवेत्, ततः कथं--केन प्रकारेण, 'नु' इति वितर्के, शबलचारित्री-कर्बुरशीलः, एकविंशतिस्थानेषु–इति संख्यानियमितेषु, भणितः–उक्त, एवं वक्ष्यमाणनीत्या, दशाश्रुतस्कन्धावश्यकादिषु, इति गाथार्थः ॥

तान्येवार्थतः प्राह—

आउट्टियाए पाणाइ–वायकत्ता तहा उ भुजंतो ।
आहाकम्मं कंदाइयं च एमाइ इगवीसं ॥ २३५ ॥

व्याख्या–आकुट्टिकया–जानन् अनापदि यत् सेवते ।तथाचोक्तं दशाश्रुतस्कन्धचूर्ण्याम्–" आउट्टिया नाम जाणंतो अणावइए जं सेवइ" त्ति, प्राणातिपातकर्त्ता–जीवघातविधाता, तथाऽपरं, भुञ्जानो–अभ्यवहरन्, आधाकर्म–प्रतीतं, मूलादिकं च–मूलफलादिकं, एवमादि–इत्थं प्रभृति, एकविंशतिर्ज्ञेयानि ' शबलस्थानानि, इति शेषः ।

तथा भगवत्यां पुलाक–बकुश–प्रतिसेवनाकुशीलानां मूलोत्तरगुणसेवित्वं चारित्रे भणितम् । यद्यपि बकुशस्योत्तरगुणसेवित्वं तत्र भणितं, तथाप्युत्तराध्ययनचूर्ण्यां तस्यापि मूलगुणसेवित्वं भणितमास्ते; न च वेलानियमः कृतः, इति गाथार्थः॥

अस्यैव भावार्थमाह—

नाणे सइ चारित्तं, नाणं पुण होइ सम्मदिट्ठिस्स ।
तो नज्जइ समत्तं जहवायमकुव्वउ वि भवे ॥ २३६ ॥

व्याख्या-ज्ञाने–बोधरूपे, सति- विद्यमाने, चारित्रं--शीलम्, ज्ञानं,--पुन-

रूक्तरूपं, भवति जायते, सम्यग्दृष्टेर्दर्शनवतः, ततो, ज्ञायते--बुध्यते, सम्यक्त्वयुक्तरूपं, यथावादं प्रतिज्ञारूपं, अकुर्व्वतोऽपि अविदधतोऽपि, न केवलं कुर्व्वन इत्यपिशब्दार्थः, भवेज्जायेत, इति गाथार्थः ॥

अभ्युच्चयार्थमाह—

**तह मिरिइ-नंदिसेणा ताण मया मिच्छदिट्ठिणो होंति ।**
**मोत्तूण तो त्तिभूमी एमाइ जिणाणभंगाओ ॥ २३७ ॥**

व्याख्या—तथा-अपरं दूषणम, मरीचिनन्दिषेणौ-प्रतीतौ, तेषामेवंवादिनां, मतादु—बोधात्, मिथ्यादृष्टी,भवतो—जायेते । कस्मात्? मुक्त्वा-परिहृत्य-यदि प्रव्रज्यां कर्त्तु न शक्नोतीति शेषः, ततः, त्रिभूमिः प्रतीता, एवमादि जिनाज्ञाभङ्गात्-सर्व्वज्ञशासनलोपादु वकारश्चात्र प्राकृतलक्षणेन लुप्तः, आदिशब्दात् " मुसाव्वगत्तं च रतराग० " इति गाथार्थः ॥

ननु तौ मिथ्यादृष्टी भविष्यतः, इत्याह—

**सम्मत्तं पुण ताणं समयंमि य देसियं तओ मुणह ।**
**सव्वत्थ नयमएणं सुत्ताणं होइ वक्खाणं ॥ २३८ ॥**

व्याख्या—सम्यक्त्वं दर्शनं, पुनस्तयोर्मरीचि—नन्दिषेणयोः समये सिद्धान्ते, देशितं कथितं; ततस्तस्मात्, मुणत—जानीत, सर्व्वत्र सर्व्वस्मिन, नयमतेन च नयाभिप्रायेण, सूत्राणां—आगमवचसां, भवति—जायते, व्याख्यानं—विवरणम, तथाह्यावश्यके—

" दंसणपक्खो—सावय—चरित्तभट्ठे य मंदधम्मस्स " । अस्य गाथार्द्धस्य तच्चूर्ण्या व्याख्यानम " सावउ न सक्कइ विसयगिद्धो पव्वइउं, सो भणइ-दंसणं पि ता मे होउ'त्ति, तस्स एस पक्खो, चरित्तभट्ठे वा, एवं चेव मंदधम्मे वा । जो गहियं गहीयं भंजइ; " तथा आचाराङ्गे—" से बेमि समणुन्नस्स वा असमणुन्नस्स वा खाइमं साइमं वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा नो पाएज्जा, नो निमंतेज्जा, नो कुज्जा वेयावडियं, परं आढायमाणोत्तिबेमि ॥ " तत्र प्रथमपदस्य व्याख्या—समनोज्ञा दृष्टितो लिङ्गतश्च, न त्वाहारादिभिः पार्श्वस्थादयः,

असमनोज्ञास्तु शाक्यादयः । अस्य सूत्रस्य संवादो निशीथचूर्ण्यां तद्भाष्ये च बहुषु स्थानेषु विद्यते–' सम्यक्त्वादीनि पार्श्वस्थादीनि विद्यन्ते इत्यर्थः । स तु ग्रन्थविस्तरभयान्न लिखितम् । तस्मादत्र नयैरेवोत्तरम्, न च " नया न विद्यन्ते इति वक्तव्यं, चतुर्थव्याख्याङ्गत्वान्नयानाम् । तथा चोक्तम्–उपक्रमो निक्षेपोऽनुगमो नयाः' इति । परमिति श्रुत्वा न मुमुक्षुणा चारित्रं प्रति मन्दआदरः कार्यः, चारित्रं विना ज्ञानदर्शनयोर्मोक्षं प्रत्यनङ्गत्वात्, इति गाथार्थः ॥

नयाभिप्रायमेव विशेषतः प्राह—

किंची उस्सग्गसुयं ववायसुयं च किंचि किंचेत्थ ।
उभयसुयं पुण किंची मुज्झंती तेण मंदमई ॥ २३९ ॥

व्याख्या–किञ्चिद्–उत्सर्गश्रुतं–सूत्रं वा, अपवादश्रुतं च किञ्चित्, किञ्चासमुच्चये, अत्र–जिनप्रवचने, उभयश्रुतमुत्सर्गापवादरूपं, पुनः, किञ्चिदेकम्, मुह्यन्ते–सन्दिह्यन्ते, तेन कारणेन, मन्दमतयः स्वल्पधिषणाः । एषां च स्वरूपं नीशीथादवमेयम्, इति गाथार्थः ॥

अपरं च सन्देहकारणमाह—

तह समयविऊ वयणं वयंति वयणाइं बहुपयाराइं ।
निंदाथुइभेएणं हवंति तो जीव ! मा मुज्झ ॥ २४० ॥

व्याख्या–तथा परं, समयविदः सिद्धान्तज्ञाः, वचनं–वाक्यं, वदन्ति जल्पन्ति, वचनानि–सिद्धान्तवाक्यानि, बहुप्रकाराणि–नानाभेदानि, निन्दास्तुतिभेदेन उपलक्षणत्वादुभयवचनादीनि, भवन्ति–जायन्ते; ततो जीव ! आत्मन् ! मा निषेधे, मुह्य–सन्देहं कुरु । इति गाथार्थः ।

तान्येव विवृण्वन् निन्दावचनं तावद्विवरीतुमाह—

सोचा ते जियलोए इमाए गाहाए निंदिओ नाणी ।
नाणगुणाभावाउ नउ सो अन्नाणिणो हीणो ॥ २४१ ॥

व्याख्या–शोच्यास्ते जीवलोकेऽस्यां गाथायां, शेषं तु–" जिणवयणं, जे

नरा न यार्णति, सोचाणवि ते सोच्चा, जे नाऊणं वि न करिंति." इति इत्थं सुबो-धम्। निन्दितो हीलितो ज्ञानी–सूत्रवान, ज्ञानगुणाभावात्–विरतिलक्षणगुणा-भावात्, न पुनर्नैव, स ज्ञानी, अज्ञानिनः–श्रुतविकलात् सकाशात्, हीनस्तुच्छः, इति गाथार्थः ॥

किमित्याह—

**नाणगुणो जं अहिओ अन्नाणिणो नत्थि सो उ तो हीणो ।**
**एवं ठियंमि नज्जइ निन्दावयणं फुडं चेयं ॥ २४२ ॥**

व्याख्या–ज्ञानगुणो यस्मादधिकोऽर्गलः, अज्ञानिनः–श्रुतविकलस्य, नास्ति–न विद्यते, स ज्ञानगुणः, तुः पूरणे, ततो, हीनः तुच्छो, ज्ञानिनोऽज्ञानी। एवं स्थिते इत्थं सति, ज्ञायते बुध्यते, निन्दावचनं हीलावाक्यं, स्फुटं प्रकटमेतत्–'सोच्चा ते जियलोए' इत्यादिकम्, एवं ह्यसौ निन्द्यते–येन उद्यमं न करोति, न पुनरज्ञानिनः स हीनः, इति गाथार्थः ॥

स्तुतिवाक्यविवरणमाह—

**'एक्को वि नमुक्कारो' इच्चाइयं तु होइ थुइवयणं ।**
**नहि एग नमोक्कारो संसारुत्तारणं होइ ॥ २४३ ॥**

व्याख्या–' एकोऽपि नमस्कारः ' इत्यादिकं तु भवति स्तुतिवचनं–स्तवनवाक्यम्, आदिशब्दात् " जिणवरवसहस्स वद्धमाणस्स, संसारसागराओ तारेइ नरं व नारिं वा " इति ग्राह्यम्, नहि–नैवैकनमस्कारात् प्रसिद्धात् संसारोत्तरणं, भवति- जायते, इति गाथार्थः ॥

पराभिप्रायमाशङ्क्याह—

**अह सेसावस्सयसंजुयस्स सहलो कहं नु तो एगो ।**
**अह एगो चिय साहइ तो किं सेसकिरियाए ॥ २४४ ॥**

व्याख्या–अथ पराभिप्रायार्थः, शेषावश्यकसंयुतस्य–समस्तानुष्ठानपरायणस्य, सफलः–स्वकार्यकृत्, कथं–केन प्रकारेण, 'नु' इति वितर्के, ततो एकः,

अद्वितीयः, अथ एक एव साधयति निष्पादयति 'मोक्षं' इति शेषः, ननः किमिति प्रश्न, न तु शेषक्रियया नमस्कार–व्यतिरिक्तानुष्ठानेन; एकनमस्कारेणैव मोक्षस्य सिद्धत्वाद् इति गाथार्थः ॥

न केवलं नमस्कारस्येदं माहात्म्यं, किन्त्वपरेषामपीत्याह—

**सव्वे वि य सुहजोगा फलया कम्मक्खयत्थं कीरंता ।**
**अविसेसेवि विसेसो नज्जइ थुइवयणमेवं तु ॥ २४५ ॥**

व्याख्या–सर्वेऽपि समस्ताः, न केवलं नमस्कार इत्यपि शब्दार्थः, शुभ-योगाः–प्रशस्तव्यापाराः, फलदा–मोक्षसाधकाः, कर्मक्षयार्थं पापाद्यपोहनिमित्तं, क्रियमाणा विधीयमानाः, अविशेषेऽपि ' विशेषो नमस्कारो मोक्षदः इति ज्ञायते–बुध्यते, स्तुतिवचनं--स्तववाक्यम, एवं- इत्थं, ततस्तस्माद् '' इति गाथार्थः ॥

ननु किं नमस्कारान्मोक्षो न भवति ? इत्यस्योत्तरगर्भं जीवोपदेशमाह--

पारपरेण एगो वि होज्ज संसारतारओ सो उ ।
एवं ठियंमि रे जीव ! मुणसु जं बिंति समयन्नू ॥ २४६ ॥

व्याख्या--पारंपरेण--परंपरया, एकोऽपि भवेत्, संसारतारकः, स,--नमस्कारः, तुः पूरणे, एवं स्थिते इत्थं प्रतिष्ठिते, स्तुतिवाक्ये, रे जीव ! भोः प्राणिन् ! मुण--जानीहि, यद्ब्रुवते समयज्ञाः--सिद्धान्तविदः, एवं भयवाक्यादीन्यपि बहु-श्रुतसंवातोऽवगम्यानि, इति गाथार्थः ॥

यो यथावादं न करोति स मिथ्यादृष्टिः इत्यादि वर्णनो द्वात्रिंशोऽधिकारः ॥

अथ त्रयस्त्रिंशमाह—

**वेसो वि अप्पमाणं इच्चाई दंसिऊण वारिंति ।**
**सव्वं पि हु करणीयं इह लिंगुवजीविणो वइणो ॥ २४७ ॥**

व्याख्या–'वेषोप्यप्रमाणम'-इत्यादि निदर्श्य–कथयित्वा, आदिग्रहणाद् "संजमपएसु वट्टमाणस्स, किं परिपत्तियवेसं विसं न मारेइ खज्जन्तं " इति दृश्यं; वारयन्ति–निषेधयन्ति, सव्वमपि–समस्तमपि, करणीयं--कर्त्तव्यम, इह समये,

लिङ्गोपजीविनो–गुणशून्यस्य व्रतिनः साधोः, इति गाथार्थः ॥

उत्तरमाह—

**तत्थवि एवं बुज्झसु तं पइ अप्पमाणमेव सो वेसो ।**
**जो निस्संकं वट्टइ असुहट्ठाणेसु तेण जुओ ॥ २४८ ॥**

व्याख्या–तत्रापि–वेषनिराकरणे, बुध्यस्व–जानीहि, तं प्रति–तमाश्रित्य, अप्रमाणमेव–निष्फलः, स वेषो–रजोहरणादिः, योऽनिर्दिष्टनामा, निःशङ्कं निरपेक्षं, वर्तते, अशुभस्थानेषु साध्वयोग्येषु, तेन वेषेण, युतः सहितः, इति गाथार्थः॥

एतदेव भावयन्नाह—

**दुग्गइगईए गच्छंतयस्स न हु तस्स तेण साहारो ।**
**ववहारा अन्नेसिं तस्सवि लिंगं पमाणं तु ॥ २४९ ॥**

व्याख्या–दुर्गतिगत्यां–नरकादिकायां, गच्छतो–व्रजतः, न च, दुरवधारणे, तेन वेषेण, तस्य लिङ्गोपजीविनः, साधारः परित्राणम, व्यवहारात् व्यवहारनयमतेन, ( अन्येषां ) तस्यापि–लिङ्गोपजीविनोपि, लिङ्गं वेषः, प्रमाणमेव, तुरवधारणे, इति गाथार्थः ॥

व्यतिरेकमाह—

**जइ न पमाणं तो कह णु कप्पगंथंमि एरिसं वुत्तं ।**
**सुविहियजईण इयरं पडुच्च एयाए गाहाए ॥ २५० ॥**

व्याख्या–यदि, नेति निषेधे, प्रमाणं लिङ्गमिति शेषः, ततः, कथं, ' नु ' इति वितर्के, कल्पग्रन्थे–प्रतीते, ईदृग्–वक्ष्यमाणम, उक्तं भणितं, सुविहितयतीनां प्रधानसाधूनाम, इतरं लिङ्गोपजीविनं, प्रतीत्याश्रित्य, उपलक्षणत्वाद्विशिष्टं चेत्यपि द्रष्टव्यम, एतद्गाथया, इत्यर्थः ॥

तमेवाह—

**लिंगत्थस्स उ वज्जो तं परिहरओ व भुंजओ वावि ।**
**जुत्तस्स अजुत्तस्स व रसावणो एत्थ दिट्ठंतो ॥ २५१ ॥**

व्याख्या–लिङ्गस्थस्य–रजोहरणादिवतः, तुरवधारणे, स च व्यवहितो योज्यः, स चैवम्–वर्ज्य एव–परिहरणीयः आधाकर्म्माद्याहारः शय्यातरः, तदाधाकर्म्मादिकं, तस्य स्वयं परिहरतो–वर्जयतः, भुञ्जानस्य–आसेवतः, वापीति समुच्चये, युक्तस्य वाऽयुक्तस्य वा वक्ष्यमाणनीत्या, वा समुच्चये, रसापणः–कल्पपालहट्टः, अत्र दृष्टान्तः–इहोदाहरणम् । यथा हि–कस्मिँश्चिद्देशे कल्पपालहट्टस्योपरि ध्वजः क्रियते, ततस्तं दृष्ट्वा सुखेनैव ब्राह्मणादयस्तं वर्जयन्ति, एवमत्रापि रजोहरणादि ध्वजतुल्ययोज्यम्, इति गाथार्थः ॥

तामेव गाथां किञ्चिद्व्याख्यातुकाम आह—

वक्खाणं एईए तत्थ उ जुत्तस्स संजमगुणेहिं ।
अजुयस्स उ तेहिं चिय इय लिंगुवजीविणो भणियं ॥ २५२ ॥

व्याख्या–व्याख्यानं–विवरणम् एतस्याः–पूर्वोक्तगाथायाः, तत्र पुनः कल्पग्रन्थे, युक्तस्य–सहितस्य संयमगुणैः–क्षान्त्यादिभिः, अयुक्तस्य असहितस्य तुः पूरणे तैरेव क्षान्त्यादिभिः, इति–इत्थं, लिङ्गोपजीविनः- साधुवेषधारकस्य, भणितमुक्तम्, इति गाथार्थः ॥

व्यतिरेकमाह—

जइ लिंगमप्पमाणं हविज्ज तो तस्स अविरयस्सेव ।
सिज्जायरंमि चिंता आहाकम्मेव का जइणो ॥ २५३ ॥

व्याख्या–यदि, लिङ्गं वेषः, अप्रमाणं–अकारणं, भवेद्–जायेत, ततः, तस्य–लिङ्गोपजीविनो,अविरतस्येव मिथ्यादृष्टेरिव, शय्यातरे–वसतिदातरि, आधाकर्म्मणि वा–प्रतीते, वा समुच्चये, चिन्ता–तद्वक्तव्यरूपा, का ? न काचित् यतेः साधोः, इति गाथार्थः ॥

इति स्थिते जीवोपदेशमाह—

तम्हा एवं देससु रे जिय ! धम्मत्थमप्पणो एवं ।
सव्वाणं सुत्ताणं विसयविभागो हु दुन्नेओ ॥ २५४ ॥

व्याख्या--तस्मादेवं--पूर्वोक्तक्रमेण, दिश--कथय, रे जीव !--भोः प्राणिन् ! ध-

र्मार्थं वृषनिमित्तम्, आत्मनः--स्वस्य, एवमुक्तवत्, सर्वेषां--समस्तानां, सूत्राणां, विषयविभागो यथावस्थितरूपो, दुःखोन्नेयः कृच्छ्रबोद्धव्यः, इति गाथार्थः ॥

वेषोऽप्रमाणमिति कथनविचारस्त्रयस्त्रिंशोऽधिकारः

इदानीं चतुस्त्रिंशमाह—

सुहिएसु य एमाई वयणेसु असंजयाउ विंतन्ने ।
पासत्थाई तं नो जम्हेवं बिंति समयन्नू ॥ २९५ ॥

व्याख्या-" सुखितेषु च-मानवत्सु, " एवमादिवचनेषु-इत्थं प्रभृतिभणितेषु, आदिग्रहणाद्-"दुहिएसु य जा मे असंजएसु अणुकंपा। रागेण व दोसेण व तं निंदे तं च गरिहामि ॥ " तथा "अस्संजयाण पूया दस वि अणंतेण कालेणं " इत्यादि च दृश्यं सुबोधं च: असंय[*तास्तु ब्रुवते पार्श्वस्थादयः त] त्किमेषां दत्तेनेति। तत्परोक्तं, नेति निषेधे, यस्माद्, एवमित्थं, ब्रुवते-गदन्ति, समयज्ञाः-आगमवेत्तारः, इति गाथार्थः ॥

तदेवाह—

अस्संजयाण परतित्थियाण कविलाईयाण रागेण ।
सयणिज्जो वा अम्हं अम्हव्वयदेसिओ व इमे ॥ २९६ ॥

एयस्सिमिणा दत्तेण होइ एयस्स चित्तसंतावो ।
दोसेणेवं दाणं तंमि चिय जाणिमं अत्थं ॥ २९७ ॥

व्याख्या-असंयतानामिति कोर्थः ? परतीर्थिकाणाम्, तानेव नामत आह-कपिलादीनां-साङ्ख्यब्राह्मणादीनाम्, रागेण-स्नेहेन, एतदेव भावयन्नाह-स्वजनो बन्धुरस्माकम्, 'अम्हवयदेसिओव' त्ति देशीभाषया अस्मत्सन्देशकाः, वा शब्दः समुच्चयार्थः, अयं शाक्यादिः, एवं मत्या यद्दानं तद्रागतो दानं भण्यते । द्वेषत आह-एतस्य- विवक्षितस्य शाक्यादेः अनेन अशनादिना दत्तेन-वितीर्णेन, भवति-जायते,

*कोष्ठकान्तर्गतपाठो द्वयोरपि पुस्तकयोस्त्रुटित एव भाति. १-संदेशकः क.

एतस्य-मदुद्दिष्टशाक्यादेश्चित्तसंतापो-मानसखेदः, द्वेषेण-मत्सरेण, एवम्-इत्थं, दानं वितरणं, 'भवति' इति क्रियाध्याहारः; तयोरपि-रागद्वेषदानयोः, जानीहि-अवगच्छ, अमुं-निर्दिष्टम्, अर्थमभिधेयम्, इति गाथार्थः ॥

पराभिप्रायमाशङ्क्याह—

संजयविवक्खभूया पासत्थाई असंजया एत्थ ।
भन्नंती नोअन्ने, अह तं नो, जेण सुत्तमिणं ॥ २५८ ॥

व्याख्या-संयतविपक्षभूता-व्रतिप्रतिपक्षसदृशाः, पार्श्वस्थादयः-प्रतीता, असंयता-असंयतशब्दवाच्याः, अत्र पूर्वोक्तवाक्येषु, भण्यन्ते,-प्रोच्यन्ते, नो-नैव अन्ये-शाक्यादयः अथ पराभिप्रायार्थः। तत्परोक्तं, नेति निषेधे, यस्मात्सूत्रं-सिद्धान्तवचनमिदं वक्ष्यमाणम इति गाथार्थः ॥

तदेवार्थतः प्राह—

जीवेणं असंजय-अविरयएमाइगुणजुओ भंते ! ।
अण्हाइ पावकम्मं हंता अण्हाइ पडिवयणं ॥ २५९ ॥

व्याख्या-जीवः-प्राणी, 'णं' इत्यलङ्कारे, असंयतः संयमाभावात्, अविरतः प्रत्याख्यानाभावात्, एवमादिगुणयुक्तः-इत्थं प्रभृतिगुणसहितः; 'भदन्त' इति श्रीवीरामन्त्रणे, 'अण्हाइ'त्ति-आश्रवति, पापकर्म्म-ज्ञानावरणादि, ? 'हंता' इति गौतमामंत्रणे, 'अण्हाइ'त्ति 'आश्रवति पापकर्म' इति प्रतिवचनमुत्तरम। तथा च भगवन्तं प्रति गौतमो "भगवत्यादाविदमाह-" जीवेणं भंते असंजए अविरए अपडिहयपच्चक्खायपावकम्मे पावं कम्मं अण्हाइ ? हन्ता गोयमा ! जीवेणमित्यादि तदेव वाच्यमुत्तरम, अतः स्थितमिह सामान्येनासंयतो जीवो भण्यते इति गाथार्थः ।

व्यतिरेकं सपादया गाथया प्राह—

जइ पुण पासत्थाई असंजया एत्थ होंति विन्नेया ।
तो कह सम्मत्तस्स उ एस गुणो होज्ज सद्दाणं ॥ २६० ॥

दुक्खियजीवणुकंपा.

व्याख्या—यदि, पुनः, पार्श्वस्थादयः, असंयता, अत्र—विचारे, भवन्ति, विज्ञेया, ततः, कथं, सम्यक्त्वस्य, तुः पूरणे, एष—वक्ष्यमाणो, गुणो—निर्म्मलता, भवेत्तु—जायेत, श्राद्धानां श्रावकाणाम् । किं लक्षणः ? इत्याह—(दुःखितजीवानुकम्पा) श्रावकेण हि दुःखितजीवानामुपरि अनुकम्पा—दया विधेया, स कथं घटते ? यदसौ तां निन्दति, इति सपादगाथार्थः ॥

एतच्च पराभिप्रायमभ्युपगम्योक्तं 'पार्श्वस्थादयो दुःखिताः' इति; परमार्थतस्तु दुःखिता एते न भवन्तीति द्वितीयं पदमाह—

नय दुक्खी एए किंतु अंधाई !

व्याख्या—नच—नैव, दुःखिताः पीडिताः, एते—पार्श्वस्थादयः, किन्तु प्रत्युत्तरवाक्ये, अन्धादयः चक्षुर्विकलकाणकुण्टादय एव दुःखिनः, इति पदार्थः ॥

अभ्युच्चयार्थमुत्तरार्द्धमाह—

किंच निसीहे भणिया विरया तह संजया एए ॥ २६१ ॥

व्याख्या—किञ्च—अपरं, निशीथे—शास्त्रशिरोमणौ भणिता—गदिताः । विरताः संयताश्च, एते—पार्श्वस्थादयः, इत्युत्तरार्द्धार्थः ॥

तदेवार्थतः प्राह—

विरया पासत्थाई इयरे पुण मिच्छदिट्ठिणो होन्ति ।
विरयाविरया सड्ढा इय संजयमाइणो वि भवे ॥ २६२ ॥

व्याख्या—विरताः पार्श्वस्थादयः, इतरे अविरता मिथ्यादृष्टयो, भवन्ति, विरताऽविरताः श्राद्धाः, इति संयतादयोऽपि भवेयुः; सकारोऽलाक्षणिकः। तथाहि—संयताः, पार्श्वस्थादयः, असंयता मिथ्यादृष्टयः, संयतासंयतास्तु श्रावकाः, इति ॥

तथा चोक्तं निशीथभाष्ये—

विरए व अविरए वा विरयाविरए व तिविहते इत्थं ।

जं जं जुंजइ जोगं तट्टाणपसंधणं कुणइ ॥ १ ॥

व्याख्या—"पासत्थाईया विरया, अविरयसड्ढो मिच्छादिट्ठी वा अविरओ, गिहीताणुव्वओ विरयाविरओ, तिविह, तिगिच्छोट्टो पयं देइ" इत्यादि। तथा तत्रैव मार्गगमनाधिकारे—" असंजयलिंगीहिं उ पुग्सागिईपंहपहि यं दिवाए" प्रथमपदस्य तच्चूर्णिव्याख्या—"असंजया गिही अन्नलिंगी वा" लिङ्गमेषां विद्यते इति लिङ्गिनोऽन्यपाखण्डिनः, इत्यर्थः। तस्मादन्वयव्यतिरेकोक्तत्वात्, स्वमतेऽसंयताः अत्र परोक्तसूत्रस्थानेन भण्यन्ते, इति गाथार्थः ॥

एवं विदिते सूत्रे जीवोपदेशमाह—

सुंदरतरं खु भणियं सव्वं समओदहिंमि रे जीव ! ।
मंदमइगोयरगयं दुन्नेयं होइ किं बहुणा ॥ २६३ ॥

व्याख्या-सुन्दरतरं-प्रधानतमं, खुर्वाक्यालङ्कृतौ, भणितं—उक्तं सर्व्वं, समयोदधौ—सिद्धान्तजलधौ, रे जीव ! भो आत्मन् ! मन्दमतिगोचरगतं स्वल्पबुद्धिविषयीभूतं, दुर्ज्ञेयं दुर्वोधं, भवति जायते, किमिति प्रश्ननिर्वचनार्थः, बहुना प्रभूतेन भणितेन इति शेषः, इति गाथार्थः ॥

पुनर्जीवोपदेशमाह—

तह देससु संससु तह तह तं कुणसु सव्वणुट्ठाणं ।
जह समयन्नू जप्पंति न उण समईए उवएसो ॥ २६४ ॥

व्याख्या—तथा—तेन प्रकारेण, दिश—कथय धर्म्मम, तथा शंस—श्लाघय 'भव्यमिदमनुष्ठानं' इति, तथा—त्वं कुरु—विधेहि, सर्व्वं समस्तमनुष्ठानं—क्रियाम्; अनुस्वारोऽत्र लुप्तो द्रष्टव्यः, यथा—येन प्रकारेण समयज्ञाः सिद्धान्तविदो जल्पन्ति—गदन्ति, न पुनर्नैव स्वमत्या निजधिषणया; यत उक्तम—

"अपरिच्छियसुयनिहसस्स केवलमभिन्नसुत्तचारिस्स। सव्वुज्जमेण विकयं अन्नाणतवे बहुं पडइ ॥" इत्यादि उपदेशः शिक्षा तवेयं 'जीव' इति शेषः, इति गाथार्थः ॥

---

१–ट्ठाणससंघणं, ख. २–च्छा ट्ठापयं ख। ३ य हि वा। ४ क

असंयतशब्दविचारश्चतुस्त्रिंशोऽयमधिकारः ॥

इदानीं पञ्चत्रिंशमाह—

केइ सकज्जाविक्खा निरविक्खा अन्नअंतरायस्स ।
अन्नहट्ठियंपि सुत्तं समईए अन्नहा काउं ॥ २६५ ॥

वारेन्ति मुद्धसावय-जणं उ दिंते असुद्धमन्नाई ।
काऊणं पाणिवह इच्चाइ उल्लवेऊणं ॥ २६६ ॥

व्याख्या—केपि—एके स्वकार्यापेक्षा—आत्मप्रयोजनसस्पृहाः, निरपेक्षा—निस्पृहाः, अन्यान्तरायस्य अपरविघ्नस्य, अन्यथाप्रकारेण स्थितमपि, सत्सूत्रं—प्रकरणवचनं स्वमत्या-निजधिषणया, अन्यथा-विपरीतं, कृत्वा—विधाय, वारयन्ति—निषेधयन्ति, मुग्ध-श्रावकजनान्; तुः पूरणे, ददतो यच्छतः, अशुद्धं आधाकर्मादि, । तदेवाह—अन्ना-दि—पानप्रभृति, कृत्वा विधाय, प्राणिवधं जीवहिंसाम, इत्यादि—एवं प्रभृति, उल्ल-प्य—कथयित्वा, आदिग्रहणाद् ''दाणं जो देइ धम्मसद्धाए, दाहिऊण चंदणं सो करेइ इंगालवाणिज्जं'' इति दृश्यम । पराभिप्रायोऽयमस्य—यः किलैकेन्द्रियानुप सज्यं साधुभ्यो यच्छतस्तस्य बहुच्छेदश्चन्दनदाहतुल्याः, लाभश्च स्तोकोऽङ्गारमूल्यः, सदृश इति गाथार्थः ।

एतन्निराकरणार्थं गाथाद्वयमाह—

वक्खाणाओ विसेसो नज्जइ सव्वाणमेत्थ सुत्ताणं ।
अविरोहा समयन्नू भणंति एयस्सिमो अत्थो ॥ २६७ ॥

बेइंदियाइपाणे हणिऊणं एत्थ देइ जो दाणं ।
परसमये तस्सेयं चंदणइंगालुदाहरणं ॥ २६८ ॥

व्याख्या—व्याख्यानाद्—विवरणाद्, विशेषोऽर्थविभागो, ज्ञायते—बुध्यते, स-र्वेषां-निःशेषाणाम, अत्र जिनमते, सूत्राणां—सिद्धान्तवचसां, अविरोधात्—अ-त्राविप्रतिपत्त्या, समयज्ञाः—सिद्धान्तविदो, भणन्ति जल्पन्ति, एतस्य पूर्वोक्तवच-नस्य अयं—वक्ष्यमाणोऽर्थोऽभिप्रेतम; द्वीन्द्रियादिप्राणान् प्रतीतान्, हत्वा विनाश्य, अत्र

जगति, ददाति -प्रयच्छति, योऽनिर्द्दिष्टनामा, दानं--वितरणं 'मांसादि' इति शेषः, परसमये--अन्यसिद्धान्ते, तस्य--मांसदातुः, इदं- पूर्वोक्तं, चन्दनाङ्गारोदाहरणं प्रतीतं तुच्छलाभप्रभूतहानिजनकम्, यतो विशेषप्रस्तावाद् द्वीन्द्रियादय एव प्राणा भण्यन्ते, नत्वेकेन्द्रियाः; तथा चोक्तं—

प्राणा द्वित्रिचतुःप्रोक्ता भूताश्च तरवः स्मृताः। जीवाः पञ्चेन्द्रिया ज्ञेयाः शेषाः सत्त्वा इतीरिताः ॥" इति गाथाद्वयार्थः

पराभिप्रायमाशङ्क्याह—

अह कह नज्जइ एयं, भण्णइ, सुत्तस्स जायइ विरोहो।
को णु विरोहो सुण भो ! भयवइवयणं इमं जम्हा ॥२६९॥

व्याख्या--अथेति प्रश्नार्थः, कथं--केन प्रकारेण, अनुस्वारोऽत्र पूर्ववत्, ज्ञायते--बुध्यते, एतत्--प्राणशब्देन द्वीन्द्रियादयो न त्वेकेन्द्रिया गृह्यन्ते ? भण्यते--कथ्यते, सूत्रस्य--सिद्धान्तवचनस्य, जायते--भवति, विरोधो--विप्रतिपत्तिः। परः प्राह--कः किमभिधानः,'नु' इति वितर्के, विरोधः--उक्तस्वरूपः ?, आचार्यः प्राह--शृणु--आकर्णय, 'भो' इति परामन्त्रणे, भगवतीवचनं--पञ्चमाङ्गसूत्रमिदं--वक्ष्यमाणं यस्मादुच्यते इति गाथार्थः ॥

तदेवार्थतः प्राह—

सजियमणेसणीयं वा समणे वा माहणे दिंतस्स।
किं कज्जइ, भो गोयम ! बहु निज्जरमप्पबंधो उ ॥ २७० ॥

व्याख्या--सजीवं-सचेतनम्, अनेषणीयं आधाकर्म्मादि, वा समुच्चये, श्रमणे साधौ, माहने--जीवरक्षके, 'वा' शब्दो समुच्चये, ददतः प्रयच्छतः, किमिति प्रश्न. क्रियते अनेकार्थत्वाद्भवति ? भगवानाह--'भो' इत्यामन्त्रणोद्योतकः, गौतम इन्द्रभूते, बह्वी प्रचुरा निर्ज्जरा--कर्म्महासलक्षणा, अल्पः—स्तोको बन्धः कर्म्मोपादानं, तुः पूर्ववत्, तथा च तत्सूत्रम्--" तहाविहं समणं वा माहणं वा पडिहयपच्चक्खायपावकम्मं अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणे भंते. किं कज्जइ ? गोयमा ! अप्पे पावे कम्मे. बहुयरिया से निज्जरा किज्जइ, इति गाथार्थः ॥

ननु' कोऽत्र दृष्टान्तः' इत्युक्तिप्रत्युक्तिसम्बद्धगाथात्रयमाह—

खवगरिसिखीरीनाएणं भणसि अहगुणिजणे भवे एगं।
गुणवंतमगुणवंतं जाणइ नणु केवली सम्मं ॥ २७१ ॥
अहरुत्तरवासावास कज्जट्ठियसाहुजुयलनाएणं।
इयराणं पुण निच्छयववहारनएहिं ववहरणं ॥२७२॥
निच्छयनएण हीणेवि सुद्धभावाउ निज्जराभागी।
भणिओ पुव्विं ववहारओ वि लिंगपमाणाउ ॥ २७३ ॥

व्याख्या--क्षपकर्षिक्षिरिज्ञातेन--तपस्विपरमान्नोदाहरणेन, तच्च किल--कयाचिदगार्या कस्यचित् क्षपकर्षेर्मासक्षपणपारणके तदर्थं क्षीरिं विधाय यथाऽसौ न लक्षयति तथा दत्ता। क्षपकर्षिणा च सूत्रोपयुक्तेनाशठभावेन गृहीता। भुञ्जानस्य तां शुद्धभावेन केवलमुत्पन्नम्, ततो ज्ञातं यथा मदर्थं कृतेति। तस्या अगार्याः प्रभूतो लाभोऽल्पश्च कर्मबन्धो भणितः, तस्माद्बहुलाभे स्तोकहान्यां कथं परोक्तदृष्टान्तकथनम् ?।

पराभिप्रायमाशङ्क्याह—भणसि—जल्पसि, अथेति पराक्षकाशे, गुणिजने प्रधानपात्रे, भवेदेव बहुलाभस्तोकहानिलक्षणं फलम्।

आचार्यः प्राह—गुणवन्तं—प्रधानसंयमिनं, अगुणवन्तं—तद्विपरीतं जानाति—बुध्यते, ननु—अहो परः, केवली—प्रत्यक्षज्ञानी, सम्यग—अवैपरीत्येन।

दृष्टान्तमाह—अथ उत्तर वर्षावासकार्यस्थितसाधुयुगलज्ञातेन, तच्च प्रागेव 'नवविणयसत्तपूये'त्यादिगाथायां कथितम। तत्र हि लोकेन गुणवान् क्षपकर्षिरवबुद्धः, केवलिना त्वितरः कथित इति। इतरेषां- छद्मस्थानां, पुनर्निश्चयव्यवहारनयाभ्यां, व्यवहरणं—आचारः। तावेवाह—निश्चयनयेन निश्चयनयाभिप्रायेण, हीनेऽपि गुणतुच्छेपि, शुद्धभावात्--प्रशस्तान्तःकरणात्, निर्जराभागी--कर्महासकारको, भणित उक्तः।पूर्वं पश्चात् 'निच्छयओ पुण अप्पेत्री'त्यादि गाथाव्यवहारतोऽपि द्वितीयनयमतेनापि लिङ्गप्रामाण्यात्--वेषप्रतिष्ठातः पञ्चकल्पादिगाथात इति गाथात्रयार्थः।।

अभ्युच्चयार्थमाह—

---

१ पतन्त्रही पर॰ क।

किंचेत्थ केवली वि हु ववहारनयं पमाणयंतो उ ।
वंदइ इयरमनायं भुंजइ य तहा अहाकम्मं ॥ २७४ ॥

व्याख्या--किञ्च--अभ्युच्चये, अत्र--जिनमते, केवल्यपि प्रत्यक्षज्ञानी, हुः पूरणे, व्यवहारनयं निश्चयविपक्षं प्रमाणयन्--अनुल्लङ्घयन्, तुस्तथैव, वन्दते--नमस्करोति, इतरं--अकेवलिनम्, किंविशिष्टः ? अज्ञातो--ऽनवबुद्धः, भुङ्क्ते च--अश्नाति, तथा समुच्चयार्थः, आधाकर्म्म--अनेषणीयम्, इति गाथार्थः ॥

एतदेव प्रपञ्चयन्नाह—

सिरिधम्मदासगणिणावि वारियं अन्नलिंगीणं दाणं
सड्ढाणं भत्तीए दाणं विणयं च वज्जइ ॥ २७५ ॥

व्याख्या--श्रीधर्म्मदासगणिनापि--उपदेशमालाकर्त्रा वारितं निषिद्धम, अन्यलिङ्गिनां--शाक्यादीनां, दानं--वितरणं, श्रावकानां--श्राद्धानां, भक्त्या--बहुमानेन, दानं विनयं च,वर्ज्जयति । तत्र दानमशनादिः,विनयस्त्वभ्युत्थानादिः"परतित्थिया-ण"त्ति पूर्व्वं भणितत्वाद्भक्तिशब्दश्चानुक्तोऽप्यस्यां वाच्यः। कथमन्यथावश्यकचूर्ण्यां-भणितं श्रावककृत्ये ?--"कारुणियाए पुण देज्जावि"त्ति कारुण्येन--अनुकम्पया तेषा-मपि दद्यात् स्वमते तु निवारितं श्रावकाणाम् । इति गाथार्थः ॥

अमुमेवार्थं प्रपञ्चयति करणतः श्रावकाणां कृत्यमिति सपादां गाथामाह—

नियलिंगीणं कारियमेयं अह नं भवत्थपडियाणं
णणु जो दोसो भीमो जइ खलु अन्नयावि भवे ॥ २७६ ॥

किं सो न वज्जणिज्जो ।

व्याख्या--निजलिङ्गिणां स्वमतवेषिणां,कारितं विधापितं, एतद्दानादीनि शेषः, श्रीधर्म्मदासगणिनेत्यत्रापि पूर्व्वगाथोक्तं सम्बन्धनीयं "जणचित्तगहणत्थं करिति लिंगावसेसेवी"त्यनेन सुसाधुभ्यः सकाशात् इति शेषः। अथेति पराशङ्कार्थः तद्दाना-द्यवस्थापतितानां ग्लानत्वे न त्वन्यदा, नन्विति परामन्त्रणे, यो दोषो–लोकहीला-लक्षणस्तस्यां ग्लानावस्थायां स दोषः पूर्वोक्तो यदि खलु निश्चयेनान्यदापि ग्लान-त्वाभावे जायेत । किमिति प्रश्ने ? स दोषो हीलालक्षणो न नैव वर्जनीयः परि-हरणीय एव श्रावकैरिति शेषः ।

अयमभिप्रायः। यदि ग्लानावस्थायां लिङ्गिनः सुसाधवो न कुर्व्वन्ति तदा प्रवचनहीला जायते, नीरोगाणां त्वसंयमानुमोदनान्न कुर्व्वन्ति। श्रावकास्तु यदि तेषां तदुचितं दानादि न कुर्व्वन्ति ततः सर्व्वदाऽपि प्रवचनखींसा भवति, इति पादाधिकगाथार्थः॥

पुनरपि पराभिप्रायमाशङ्क्य पादोनां गाथामाह—

अह जइ जंपंति सो उ मिच्छत्ति।

दव्वलिंगी भणिउ जाणसु तत्थावि पडिवयणं ॥७७॥

व्याख्या—अथेत्याचार्य्यवचनानन्तर्य्यार्थो, यदि, जल्पन्ति वदन्ति, दुर्विदग्धश्रावका इति शेषः, स लिङ्गी, तुः पूर्व्ववत्, मिथ्यादृष्टिः प्रथमगुणस्थानी, द्रव्यलिङ्गी वेषधरः भणितः उक्तः-"सेसो मिच्छद्दिट्ठो गिहिलिंगिकुलिंगदव्वलिंगीय" इत्यनेन। ततः कथं मिथ्यादृष्टेरेवं दानादि कुर्म इत्यभिप्रायः। आचार्यः प्राह-जानीहि बुध्यस्व, तत्रापि मिथ्यादृष्टित्वे प्रतिवचनमुत्तरम्, इति गाथार्थः॥

तदेवाह—

निद्धंधसपरिणामो हवेज्ज जइ कोइ सव्वहा विगुणो

तस्स फलं तस्सेव य इयराणं तत्थ का चिंता ॥७८॥

व्याख्या—"निद्धंधसत्ती" निःशूकः परिणामो भावोऽस्येति स, तथा भवेज्जायते। यदि, कोऽप्येकः, सर्व्वथा—सर्व्वप्रकारेण, विगुणः—सम्यक्त्वादिरहितः, तस्य विगुणस्य, फलं कार्यं, तस्यैव—विगुणस्यैव, इतराणां—श्रावकादीनां, तत्र विगुणे, का—किंरूपा, चिन्ता—मनोवृत्तिरिति गाथार्थः॥

किमिति तत्र न चिन्तेत्याह—

जमणंतसो य पत्तं एयं जइसावएहिं संसारे।

चउदसपुव्वधरा वि हु अणंतकायंमि निवसंति ॥ ७९ ॥

व्याख्या—यस्मादनन्तशः—सङ्ख्यातीतवाराः, प्राप्तम्, एतत्, द्रव्यलिङ्गं प्रधानमप्रधानं वा, यतिश्रावकैस्साधुश्राद्धैः, संसारे भवे तथा चोक्तं-"संसारसागरमिणं,

परिब्भमंतेहिं सव्वजीवेहिं । गहियाणि य मुक्काणि य, अणंतसो दव्वलिंगाइं ॥'
द्रव्यलिङ्गं चात्र ग्राह्यम्, यदभिन्नग्रन्थीनां तेषामेवानन्तद्रव्यलिङ्गसम्भवात् । भिन्नग्रन्थीनां तु, सकृत् सम्यक्त्वप्राप्तौ तत्प्रतिपातेऽप्यपार्द्धपुद्गलपरावर्त्तादूर्ध्वं मोक्षप्राप्त्या अनन्तद्रव्यलिङ्गप्राप्त्यसम्भवात् । न केवलं द्रव्यलिङ्गमफलं श्रुतमपि प्रमादिनामफलमेवेत्याह–चतुर्दशपूर्वधराः-श्रुतकेवलिनोऽपि नानन्तकायं प्रतीते निवसन्ति–तिष्ठन्ति, पूर्वगतसूत्राभावे सूत्रेति शेषः । पूर्वसूत्रे सति पुनर्नेति, यत उक्तं–"उववाओ लंतगम्मि, चोद्दसपुव्विस्स होइ उ जहन्नो । उक्कोसो सव्वट्ठे, सिद्धिगमो वा अकम्मस्स" इति गाथार्थः ॥

सूत्रणव विहितसम्बन्धां गाथामाह—

किंचहिगारवसाउ धम्माणुट्ठाणवित्ति सत्थेसु ।
वाहिपडिकिरियतुल्ला दोसगुणेहिं य समणुनेया ॥२८०॥

व्याख्या—किञ्चाभ्युच्चये, अधिकारवशान्नियोगिवशतः, धर्मानुष्ठानवृत्तिः—वृषकरणप्रवर्तनं, शास्त्रेषु-ग्रन्थेषु, किंविशिष्टा ? व्याधिप्रतिक्रियातुल्या-रोगनिराकरणसदृशा, दोषगुणाभ्यामपकारोपकाराभ्याम्, समनुज्ञेया बोद्धव्या । यथाहि, कश्चिद्रोगी सहिष्णुः, कश्चिदसहिष्णुः, रोगश्च कश्चिदुक्तदोषोऽपरस्तु न तथा, इत्यादि विभाव्य यस्य यथा गुणो भवति, तस्य तथा चिकित्सा विधीयतेऽन्यथा तु दोष इति । एवमत्रापि साधोः सर्वसावद्यनिवृत्तस्यान्यथा कृत्यं, श्रावकस्य त्वारम्भप्रवृत्तस्यान्यथा इति । अतः स्थितमिह, श्रावकाणामेकेन्द्रियव्यापादनेऽपि प्रभूतो लाभोऽल्पश्च दोषः पात्रदाने, इति गाथार्थः ॥

व्यतिरेकमाह—

एवं जइ नो तो परिभणेज्ज कोई इमंपि पडिवयणं ।
काऊण य पाणिवहं चेईहरकारयस्साचि ॥ २८१ ॥

व्याख्या—एवमित्थं, यदि, नो-नैव, ततः, प्रतिभणेत्-ब्रूयात्, कोऽप्येकः, इदमपि वक्ष्यमाणम्, प्रतिवचनं–प्रत्युत्तरं, कृत्वा–विधाय, प्राणिवधं–जीवोपमर्दम्,

चैत्यगृहकारकस्यापि–देवभवनकर्त्तुरपि, न केवलं यतिदातुरित्यपि शब्दार्थः, इति गाथार्थः ॥

एवं भणनेपि पर्वमतममुञ्चतः स्वरूपमाह—

सव्वारंभपयट्टस्स पुत्तमित्ताइकज्जनिरयस्स ।
इय जं जायइ बोहो तं नूणं मोहविप्फुरियं ॥२८२॥

व्याख्या—सर्वारम्भप्रवृत्तस्य–निखिलव्यापाररतस्य, पुत्रमित्रादिकार्यनिरतस्य, तत्र पुत्रोऽङ्गरूहो, मित्रं सुहृद्, आदिशब्दाच्छेषस्वजनग्रहः, तेषां कार्यं प्रयोजनं–विवाहादि, एतस्यासक्तस्येति पूर्वोक्तप्रकारेण, यस्माज्जायते भवति, बोधो मतं, तस्मान्नूनं–निश्चितं, मोहविस्फुरितम्–अज्ञानविजृम्भितम्, इति गाथार्थः ॥

इत्थंबुद्धे जीवोपदेशमाह—

सव्वाणं सुत्ताणं जं अविरोहेण होइ वक्खाणं ।
तं कुणसु सया जेणं जायइ नो अंतरायंति ॥२८३॥

व्याख्या–सर्वेषां–समस्तानां, सूत्राणां–सिद्धान्तोक्तवचसां, यद् अविरोधेन–अविप्रतिपत्त्या, भवति जायते, व्याख्यान–विवरणं, तद्व्याख्यानं, कुरु–विधेहि, सदा–नित्यं, येन–यस्मात्, जायते–भवति, नो–नैव, अन्तरायः—कर्म्मविशेषः, इति वाक्यसमाप्तौ । अयमाशयः–चन्दनाङ्गारदृष्टान्तकथनतः स्वमते सूत्रविरोधमपरिभाव्य मुग्धजनदानाकरणे प्रकट एवोक्तः कर्मबन्धः, इति गाथार्थः ॥

## प्राणिवधदानवर्णनः पञ्चत्रिंशोधिकारः ॥

साम्प्रत षट्त्रिंशमाह—

इय दढ–कलिकाल—वसु–ल्लसंतनाणामयाण साहूणं ।
एयाण नत्थि चरणं सव्वाणं केइ जंपंति ॥ २८४ ॥

व्याख्या—इति पूर्वोक्तप्रकारेण, दृढो–गाढश्चासौ कलिकालश्च दुःसमालक्षणस्तस्य वशः–आयत्तता तेनोल्लसन्ति–विजृम्भमाणानि नानामतानि–बह्वभिप्राया येषां, साधूनां–यतीनां, एतेषां पूर्वोक्तानाम्, नास्ति न विद्यते, चरणं–

चारित्रम्, सर्व्वेषां-समस्तानां, केप्येके, जल्पन्ति गदन्ति, इति गाथार्थः ॥

तन्मतं निराकुर्वन् गाथामाह—

**न कहिंपि जे दीसइ संपुन्नं लक्खणं चरित्तस्स ।**
**एयंपि नेय जुज्जइ धम्मत्थीणं जओ भणियं ॥२८५॥**

व्याख्या—न-नैव, कुत्रापि कस्मिन्नपि, येन-यस्माद्, दृश्यतेऽवलोक्यते, सम्पूर्णं-निःशेषं, लक्षणं-चिह्नं, "मग्गणुसारी सड्ढो, पन्नवणिज्जो कियावरोचेव गुणरागी सक्कारंभसगओ तहयचारित्ति" इत्यादि रूपं चारित्रिणः-शीलवतः, तदपि पूर्व्वोक्तं नैव न च,युज्यते-घटते,भणितुमिति शेषः । धर्म्मार्थिनां-वृषप्रयोजनानां, यतो-यस्माद्भणितमुक्तमागमे इति शेषः, इति गाथार्थः ॥

तदेवाह—

**अइयारबहुलयाए संपइ काले न विज्जइ चरित्तं ।**
**तं न जओ सावेक्खाए एत्थ समाही विणिद्दिट्ठो ॥२८६॥**

व्याख्या—अतिचारबहुलतायां-प्रचुरमालिन्ये, सम्प्रति-वर्त्तमाने काले समयादिरूप, न-नैव, विद्यतेऽस्ति, चारित्रं शीलं, तत्परोक्तं, नेति-निषेधे,यतो-यस्मात्सापेक्षस्सस्पृहोऽत्र-चारित्रसत्तायां परिणाम इति शेषः,समाधिरुत्तरः,विनिर्दिष्टः कथितः, अयमाशयः-यस्य षड्जीवरक्षणपरिणामो विद्यते, तस्य चारित्रमस्ति । तथा चोक्तं निशीथे-

"जा संजमया जीवेसु, ताव मूलगुणउत्तरगुणा य । इत्तरियं छेयसंयम, नियंठबउसा य पडिसेवी" अस्य व्याख्या तच्चूर्ण्याम्-" भूएसु-छसु जीवनिकाएसु, जाव संयमया लब्भइ, ताव दोण्ह ति मूलुत्तरगुणाणं अणुसज्जणा, जाव मूलुत्तरगुणा लब्भंति ताव इत्तरिसामाइयसंजमस्स छेओवट्ठावणियस्स य अणुसज्जणा लब्भइ । जाव य दो संजमा लब्भंति, ताव बउसनियंठो पडिसेवणानियंठो य अणुसज्जंति ।" तम्हा नो सुत्तं पयत्रणं न वा य चरित्ती,न वा मूलुत्तरसेवाए,सज्जं चारित्ताउ भंसो भवइ । मूले दो दिट्ठता दिइउमगडं व उत्तरगुणा वि

दंसेयव्वा, उत्तरे-मंडवदिट्ठंतो । एत्थवि-मूलगुणे भणंति य गुरवो-एकव्वयभंगे सव्ववयभंगो, एम निच्छउ । ववहारस्स पुणो जमेव एक्कं भग्गं, एकभंगे य कमेण चारित्तं गलइ " इत्यादि ।

यच्च पूर्वं चारित्रं केषुचिदधिकारेषु भणितं, तत्प्रस्तावादत्र तु मुख्यवृत्त्येति न पुनरुक्तशङ्का कार्या । एवमेव अन्येष्वपि केषुचिदधिकारेष्वपौनरुक्त्यं भावनीयम्, इति गाथार्थः ॥

## चारित्रसत्ताविचारणः षड्त्रिंशोधिकारः ॥

साम्प्रतं पूर्वोक्तं निगमयन् सप्तत्रिंशमाह—

किं बहुणा जीव तुमं पुव्वायरणासु रज्जसु ।
सयावि मा अहुणायरणासु अ सिद्धंते जेणिमं भणियं॥२८७॥

व्याख्या—किमिति-निर्वेदे, बहुना-प्रभूतेन-जल्पितेनेति शेषः, जीवात्मन ! त्वं-भवान्, पूर्वाचरणासु-चिरन्तनसामाचारीषु, रज्यस्वाभिष्वङ्ग कुरु, सदापि-नित्यमेव, मेति निषेधे, अधुनाचरणासु-साम्प्रतसामाचारीषु । यतः ता सम्यग्विचार्यमाणा विघटन्ते, यथेयं साधुचैत्येषु विद्यमानेषु स्थाने स्थाने नूतना पौषधशाला कारापणलक्षणा सामाचारी । तथाहि-श्रावकः पौषधादिकं चतुर्षु स्थानेषु करोति, तद्यथा-चैत्यगृहे, साधुसमीपे, पौषधशालायां, स्वगृहे वा । तत्र चैत्ये साधुसमीपे वा करोति, तथावश्यकचूर्ण्यां विस्तरेणेत्वरेतरयोः श्रावकयोरुपवर्णितः । यदा तु पौषधशालायां स्वगृहे वा करोति, तदा तदतिदेशं कुर्वता भणितः सैव विधिः, नवरं तत्र गमनं नास्ति । कोऽर्थः? यथा गृहान्निर्गत्य चैत्ये साधुसमीपे वा गम्यते, तथाऽत्र नास्तीति । अतो ज्ञायते, भिन्नतंरूपा पौषधशाला नास्ति, गृहैकदेश एव सा भवति । यत्तु व्यवहारवाक्यं " रायसुयाई पंचवि पोसहसालाए.संमिलियत्ति" तदाचरितवाक्यमेकदा जातम्, प्रतीतं च व्यवहारविदां । येन कारणेन जातं भवतु वाऽऽचरणत एवंरूपा पौषधशाला । तथापि-व्यभिचरति, भमति साधुचैत्ये पौषधशालायां गृहे वा पौषधादिकं क्रियते । उभयो-

रपि मनयोरावश्यकचूर्णिसत्कमिदमुक्तं—" सच्चेव विही, नवरि नत्थ गमणं न-त्थि ।" तथा " असइ साहुचेइयाणं पोसहसालाए सगिहे वि सामाइयं आवस्सयं वा करेइत्ति" अस्यार्थस्य साधकानि बहूनि भगवतीसूत्राणि विद्यन्ते.तद्यथा-"स-मणोवासगस्सणं भंते सामाइअकडस्स समणोवासए अच्छमाणस्स केइ भंडं अ-वहरेज्जा ?" तथा—"समणा वासगस्सणं भंते सामाइयकडस्स समणोवासए अ-च्छमाणस्स केइ जायं करेज्जा ? " तथा—" समणो वासगस्सणं भंते ! सा-माइयकडस्स समणोवासए अच्छमाणस्स, किं इरियावहिया किरिया कज्जइ ? सं-पराइया किरिया कज्जइ ?" इत्यादिषु पुनर्भगवतीउत्तराणि वाच्यानि । तस्मा-च्छ्रमणचैत्ययोरभावे पौषधशालादौ श्रावकादीनां पौषधादिकं कर्तुं युज्यते, तद-करणं च केनचित्कारणेन श्रद्धातुं युज्यते, अन्यथेत्थं प्रकटसिद्धान्तवाक्यानामक-रणे स्फुटतरमागमविलोपः कुतो भवति।

यदि पुनरेवं कश्चित्स्वाग्रही भणिष्यति, यदुत—न सन्ति शोभनाः सा-ध्वादयस्ततः कथं तत्समीपे करोमि पौषधादिकं? स एवं वाच्यः-येऽप्यद्यकाला-पेक्षया विशिष्टसामाचारीकास्तेषां समीपे कार्यम, तदभावेऽन्येषाम । श्रावि-काभिरप्येवं कार्यं साध्वीसमीपे। यदि त्वेवं वदति, न कोऽप्यस्ति साध्वादिः सो-ऽनया गाथया बोद्धव्यः—

जो भणइ नत्थि धम्मो न य सामाइयं न चेव य वयाइं ।
सो सव्वसंघबज्झो कायव्वो होइ संघेण ॥ २८८ ॥ इत्यादि ।

किं चास्माभिः पूर्वं सम्यक्त्वज्ञानचारित्राण्यागमवचनैः प्रसाधितानि, ते-भ्योऽपि श्रद्धातव्यं, भवभीरुभिर्गुणवत्त्वं साधूनाममीषाम । तस्मात् स्थितमिह—साधुचैत्यसत्तायां नूतनपौषधशालाकरणसामाचारी भणितयुक्त्या विघटते. सिद्धा-न्ते—आगमे, येनेदं वक्ष्यमाणं भणितमुक्तं श्रुतकेवलिना, इत्यर्थः ॥

तदेवाह—

आयरियपरंपरएण आगयं जो उ आणुपुव्वीए ।
कोवेइ छेयवाई जमालिनासं स नस्सिहिही ॥ २८९ ॥

व्याख्या—आचार्यपरंपरया-सूरिसन्तानेनागतामायातां सामाचारी-मिति शेषः, यः पुनरनिर्दिष्टनामा, आनुपूर्व्या क्रमेण, कोपयति -अन्यथा कुरुते, छेकवादी--पण्डितंमन्यो, जमालिनाशं प्रतीतं, स विकोपको, नङ्क्ष्यति--संसारे यास्यतीति तात्पर्यम्, इति गाथार्थः ॥

अभ्युच्चयमाह—

धम्मत्थीणं चरणुज्जयाण विन्नायसमयसाराणं ।
सामायारी नो चलइ पुव्वसूरीण उ कयाई ॥ २०० ॥

व्या० प्रकटार्था—

पुनरत्रैव धर्मार्थिनामुपदेशं प्रयच्छन्नपायदर्शनगर्भं गाथाद्वयमाह —

जं नत्थि आगमंमी न य आयरियं तु पुव्वसूरीहिं ।
समईए सोहणं पि हु देसंताणं इमं भणियं ॥ २०१ ॥

विगईकारणंमी जो उ परूविज्ज अन्नहा धम्मं ।
सो होज्ज अहाछंदो तव्वयणं नेव सायव्वं ॥ २०२ ॥

प्रतीतार्थं, नवरं-यथा-यथाछन्दत्वं भवति, तथा प्रथमेऽधिकारे " तं तं पन्नवेइ " इत्यादिना भावितम्, इति ॥

अत्रापि जीवोपदेशमाह—

इयलोयपारलोइयसुहाण जइ जीव ! तं सि अहिलासी ।
निउणं निरूविउणं ता जंपइ तुज्झ उवएसो ॥ २०३ ॥

सुबोधा ।

## इत्याचरणवर्णनः सप्तत्रिंशोऽधिकारः ॥

अष्टात्रिंशमाह —

रे जीव किंच जेसिं तए सुयं इय मयं बहुपगारं ।
तेसिं पि गुणे सल्लहसु जइ मज्झत्थं मणे धरसु ॥ २०४ ॥

व्याख्या— रे जीव-भो आत्मन् ! किञ्चापरं, येषामनिर्दिष्टनाम्नाम्, त्वया-भवता, श्रुतमाकर्णितम्, इतीत्थं, मतमभिप्रायः, बहुप्रकारं-नानाभेदं, तेषामपि न केवलमन्येषामित्यपि शब्दार्थः । गुणान्—क्षान्त्यादीन्, श्लाघय-वर्णय, यदि माध्यस्थं रागाद्यभावः, मनसि-चित्ते, धारयसि-धत्से, अन्यथा तन्मतदूषणतो मत्सर एव स्फुटः स्याद्, इति गाथार्थः ॥

तद्गुणश्लाघामेवाह —

धन्ना मुणीण किरियं कुणंति धारंति मलिणवत्थे उ ।
परिवज्जिअ-दव्वज्जण-ववहारा वारियारंभा ॥ २०५ ॥

व्याख्या—धन्याः-पुण्यभाजः, 'एते प्रत्यक्षाः साधवो वर्त्तन्ते' इति । क्रियाध्याहारः । यत्किमित्याह-मुनीनां-साधूनां, क्रियां-प्रत्युत्प्रेक्षणादिकां, कुर्वन्ति-चेष्टन्ते, धारयन्ति-पुनर्विदधति मलिनवस्त्रान्, तुः पुनरर्थः योजित एव, परीति-सामस्त्येन वर्जितस्त्यक्तो द्रव्यार्जनाय यद्द्रविणार्थं व्यवहारो--वाणिज्यादिको यैस्ते, तथा वारितारम्भाः--निषिद्धगृहकरणादिपापक्रियाः, इति गाथार्थः ।

प्रक्रान्तसम्बन्धां गाथामाह—

अन्नेसिंपि य संससु विमलगुणो जेण जीव तुह होइ ।
फलियं वुज्जलतरयं पमोयकरणा उ सम्मत्तं ॥ २०६ ॥

व्याख्या—अन्येषामपि--पूर्वव्यतिरिक्तानां, प्रशंस-श्लाघय, विमलगुणानतिशायिगुणान्, येन, जीव-प्राणिन् ! तव--भवतो, भवति--जायते, स्फटिक इव--रत्नविशेषः, मकारः पूर्ववत्, उज्वलतरकमतिशयनिर्म्मलं, प्रमोदकरणात् गुणवत्प्रीतेः सम्यक्त्वं दर्शनम्, इति गाथार्थः ॥

विमलगुणप्रशंसामेव गाथा नवकेनाह—

जीवंतु चिरं एए पवयणी परहिएक्ककयचित्ता ।
जेहिं पगहिव्व आगमसरस्स गाहत्तणं पत्तं । २०७ ॥

एसो सो धम्मकही अणेयमगललियमहुरवयणरसं ।
जस्स वयणारविंदे भमरव्व पिवंति भव्वजणा ॥ २०८ ॥

एसो परवाइगइंदकुंभनिद्दलणकेसरिकिसोरो ।
सलहिज्जइ सूरी दंसणस्स तिलउ महाभागो ॥ २९९ ॥

विप्फुरइ जस्स वयणंमि भारइ नट्टियव्व कव्वंमि ।
ललियपयसारसिंगारसुंदराकत्ति सो धन्नो ॥ ३०० ॥

एगंतरोववासाइगुरुयतवतवियतणुयदेहस्स ।
एयस्स चेव जम्मो कम्म-महासत्तुमरस्स ॥ ३०१ ॥

परसमयविहाडणतक्कगंथपरमत्थकहणसोंडीरो ।
स कयत्थो जस्स मई वन्निजइ विउसलोएहि ॥ ३०२ ॥

एसो समत्थदंसण—पभावणागुणसईहि संजुत्तो ।
रयणायरोव्व रेहइ सयगं अवक्खलियमाहप्पो ॥ ३०३ ॥

कप्पदुमव्व विसरंति जे उ सघस्स कप्पियत्थे उ ।
अणवरयं ते धन्ना सुसावगा दंसणुद्धरणा ॥३०४॥

किं बहुणा सव्वेसिं जियाण सलहेसु गुणगुण ।
जीव तुज्झ वस्सो एसो जइ सज्झत्थं पियं तुज्झ ॥३०५॥

व्याख्या- प्रकटार्थाः, नवरं प्रथमगाथया आगमधरगुणो वर्णितः, द्वितीयया धर्मकथकस्य, तृतीयया वादिनः, चतुर्थ्याः कवेः, पञ्चम्या तपस्विनः, षष्ठ्या- तर्कग्रन्थव्याख्यातुः, सप्तम्या समस्तगुणवतां, अष्टम्या श्रावकाणां, नवम्या समस्त- जीवानां,नैमित्तिकविद्यासिद्धाः साम्प्रतं प्रायो न सन्तीति तद्गुणगाथा न कृता.।

## गुणस्तुतिविचारोऽष्टात्रिंशोऽधिकारः ॥

साम्प्रतं प्रकरणसारमुपदेशं दातुकाम आह—

तह कुणसु तहा चिट्ठसु तह भासं पन्नवेसु रे जीव ! ।
जह रायदोसवेराण निग्गहो होइ नियमेण ॥ ३०६ ॥

स्फुटाऽभिधेया, नवरं चिट्ठउत्ति-निष्ठ; ग्रामादौ निवासं विधेहि ॥

साम्प्रतं प्रकरणमिदमुपसंहरन् येषां यादृशादुपदेशादिदं विहितं, यया हेतुतया यैर्यच्छिर्ष्यैर्यन्नामकं प्रकरणं यादृशं यैश्च यादृशैः शोधितं, येषां च यादृशानां सम्मतमिदमन्यैश्च यादृग्विधैः शोधनीयमित्यर्थावेदकं गाथाचतुष्टयमाह—

इय सिरिसिद्धतमहोयहीण सिरिनेमिचंदसूरीणं ।
उवएसाउ मज्झत्थयाए सिरिदेवसूरीहिं ॥३०७॥

सिरिवीरचंदसूरीण सिस्समित्तेहिं विरइय ।
एयं सिद्धंतजुत्तिजुत्तं जीवस्सणुसासणं विमलं ॥३०८॥

तह सयलागमपरमत्थ–कणयकसवट्टलद्धउवमेहिं ।
सयलगुणरयणरोहणगिरीहिं जिणदत्तसूरीहिं ॥३०९॥

सोहियमेयं अन्नेसिं सूरिपवराण संमयं किंच ।
जं एत्थ अणागमियं तं गीयत्था विसोहंतु ॥३१०॥

व्याख्या–इति–प्रकरणसमाप्तौ, श्रीसिद्धान्तमहोदधीनां–शोभनागम बृहत्समुद्राणां, श्रीनेमिचन्द्रसूरीणां एतन्नाम्नां श्रीमदुत्तराध्ययनलघुवृत्ति-वीरचरित-रत्नचूडादिशास्त्रकर्तॄणां बृहद्गच्छशिरोमणीनां, निष्कलङ्क-सिद्धान्तव्याख्यानामृतप्रपाप्रदातॄणामिति, यावदुपदेशात्–व्याख्यानशिक्षातो, मध्यस्थतया रागाद्यभावत्वतः, श्रीदेवसूरिभिः, श्रीवीरचन्दसूरीणां निजदेशना-वशलब्धनिर्मलकीर्त्तीनां, शिष्यमात्रैर्विनेयगणेषद्गुणैः, विरचितं-दृब्धम्, एत-दिदम्, सिद्धान्तयुक्तियुक्तं-राद्धान्तयुक्तिमहितम्, जीवस्यात्मनो भव्यस्य वानुशासनं बोधकम्, विमलं–निर्म्मलम् । तथेति किञ्च, सकलागमपरमार्थकनककष-पट्टलब्धोपमैः–निःशेषसिद्धान्ततत्त्वचामीकरतत्परीक्षादक्षोपलप्राप्तोपमानैः, सकलगुणरत्नरोहणगिरिभिर्निखिलगुणमाणिक्यरोहणशैलैर्जिनदत्तसूरिभिः एत-

श्रावकैः संसनिगृहनिवासिभिरिति यावत्, शोधितं-निर्दोषं कृतम्, एतज्जीवानु-शासनं, अन्येषां महेन्द्रसूरिप्रमुखानां सूरिप्रवराणामाचार्यवर्याणां सम्मतमभिप्रे-तम्, । किञ्चापरम्-यदत्रप्रकरणे अनागमिकमुत्सूत्रं, तद्गीतार्थाः-सिद्धान्तविदः, शोधयन्तु-निर्म्मलीकुर्व्वन्तु, इति गाथा चतुष्टयार्थः ॥

साम्प्रतमस्य प्रकरणस्य सोपमानं कार्यं दर्शयन्नाह—

सुहबोहकमलसंडाण सूरबिंबं व बोहणं कुणइ ।
पयरणमिणमो इयराण न उण पूयाण वसहा वा ॥३११॥

व्या—प्रतीतार्था ।

एतत्प्रकरणपाठादौ भव्यानां यत्स्यात्, तद्गाथात्रयेणोपदेशगर्भमाह—

मज्झत्थभावणाए पढंति चिंतंति जे उ एयत्थ ।
ते रायदोसवेरीण निग्गहं कुणहि हेलाए ॥३१२॥

तह कुगहरेणुमुक्कं दंसणरयणं तु जायए विमलं ।
तन्निग्गहाउ दंसण-सुद्धीउ जायए धम्मो ॥३१३॥

धम्माउ मोक्खसोक्खं अखंडं जायए जणाणेत्थ ।
जइ एयत्थी तो पयरणे कुणह सग्गाहं ॥३१४॥

एता अपि सुगमाः ॥

साम्प्रतमस्य प्रकरणस्याशीर्वादमाह-

जाव जिणसासणमिणं एयं जीवाणुसासणं ताव ।
नंदउ लोए सिद्धंत-जुत्तिसारं कुमयहरणं ॥३१५॥

व्या० प्रतीतार्था ॥

येनाभिप्रायेणेदं प्रकरणं कर्त्रा कृतं, तमाविष्कुर्व्वन्नाह-

पंडित्तणाभिमाणेण विरइयं नेय किंतु इय बोहो ।
धम्मरयपुव्वसूरीण चिट्ठिए जंति जइ जीवा ३१६॥

इयमपि तथैव ।

अधुना यावन्तोऽत्र मुख्यतः प्रकरणार्थाधिकारा यन्नामधेयास्तान् संगृह्य गाथापञ्चकेन स्मृत्यर्थमाह–

बिंबपइट्ठा१ पासत्थनमण२ पडिक्कमण३ वदणं४ नंदी ५ ।
दाणनिमेहो६ नइ माल७ पडिम८ अविही अणुट्ठाणं ९ ॥३१७॥

सिद्धबलि१० पढमपासत्थ११ चेइ विहि१२ सूरि१३ संघनिंदं च १४ ।
पासत्थखेत्त१५ नाणइ ढनिंद१६ गुरुगच्छ१७ चाग च १८ ॥३१८॥

बंभाइपूय१९ उस्सग्गपढण२० बलहीणं२१ अविहिगमणं च २२ ।
मलनिंद२३ सड्ढिवक्खाण२४ सइढनमणं२५ च उलग्गं २६॥ ३१९॥

संजइकहणं२७ जिणकुसुमपूय२८ सुद्धग्गह च२९ नवनिंदा ३० ।
घइचेइ३१ मिच्छ३२ अपमाणनेम३३ असंजया३४ ॥३२०॥

पाणे३५ चारित्तसत्त३६ आयरण३७ गुणथुइ३८ एए होंति ।
अडतीसा अहिगाराउ इमंमी जीवस्स गुणाणुमासणे विमले॥३२१

एतदर्थश्च पूर्वोक्ताधिकारतो ज्ञेयः ।

स्वमतिकल्पितमिदं प्रकरणमिति मुग्धमतेस्सन्देहः स्यात्तन्निराकरणार्थमाह–

समईए एत्थ नो किंपि किन्तु ज दिट्ठं कप्पववहारे ।
पंचकप्पे निसीहे दसासुए पयरणाइसु ।३२२॥

व्याख्या–स्वमत्या–निजधिषणया, प्रकरणे, नो–नैव, किमपि स्तोकं, किंतु–नवरम, यत्–दृष्टमवलोकितं, केषु? इत्याह–कल्पव्यवहारे-एतन्नामछेदग्रन्थ-द्वये, पञ्चकल्पनिशीथे एतदभिधानछेदग्रन्थयुग्मे, दशाश्रुते–दशाश्रुतस्कन्धनाम-छेदग्रन्थे, प्रकरणादिषु–पञ्चाशकोपदेशमालाष्टकादिषु आदिशब्दादाचारा-ङ्गसूत्रकृदङ्गपूज्योपदेशग्रहः, तद्ग्रथितमिति शेषः, इति गाथार्थः ॥

प्रकारान्तरेण निजनाम कथयन् प्रकरणसङ्ख्यां चाह-

देसवसुसूररीसाहिंसाई वन्नकहियनामेहिं ।
पयरणमिणमो रइयं तेवीसातिन्निसयगाहं ॥३२३॥

व्याख्या-देस, वसु, सूर, रीसा हिंसालक्षणा ये शब्दाः, तेषु ये आदि-वर्णाः-प्रथमाक्षराणि, तैः कथितं-प्रतिपादितं, नामाभिधेयं येषां ते तथा तैः, प्राकृतभाषया देवसूरीहिं इत्यर्थः । प्रकरणं ग्रन्थसन्दर्भम्,इदं प्रत्यक्षं, उ इति निपातः पूरणार्थो, रचितं-ग्रथितं, कियत्प्रमाणं ? ( ३२३ ) त्रयोविंशत्यधिकत्रिशतगाथमिति गाथार्थः ॥

क नगरादौ विरचितमित्याह-

अणहिल्लवाडनगरे जयसिंहनरेसरम्मि विजयंते ।
दोहट्टिवसहिट्ठिएहिं वासट्ठी-सूर-नवमीए ॥

व्याख्या-अणहिल्लपाटनगरे-श्रीगुर्जरराजधान्यां, जयसिंहनरेश्वरे—श्रीकर्णदेवराजसूनौ, विद्यमाने सति, दोहटिनामश्रावकवसतिस्थितैः, द्वाषष्टे संवत्सरे, एकादशशतोपरिष्टादिति शेषः; सूरेणादित्यवारेण, नवमी तिथिलक्षणा, तस्यां रचितमिति पूर्वगाथोक्तक्रियासम्बन्धात्, इति गाथार्थः ॥

॥ समाप्तेयं जीवानुशासनवृत्तिः ॥

एतस्य वृत्तिकरणे, पुण्यं यदुपार्जितं मयका ॥
तेन सुखितोऽस्तु भव्यलोकः कुग्राहवियोगतो नित्यम् ॥१॥

मासेनैकेनेयं, सरस्वतीतोषतः कृता वृत्तिः ।
अणहिल्लपाटकनगरे, विजयिनि जयसिंहनृपे ॥२॥

दोहटिवसतिवासैः, श्रेष्ठिश्रीजासकस्य दानरुचेः ।
तदुपष्टम्भादपरं च श्राविकायाः वसुन्धर्याः ॥३॥

वीरादिपुत्रमातुर्नित्यं जिनसाधुपूजनरतायाः ।
श्रीदेवसूरिभिरसौ, भव्यजने जातविमलहृदयैः ॥४॥

श्रीमज्जिनेमिचन्द्राख्यसूरिभिः शोधितादृतैः ।
वृत्तिरेषातिगम्भीरसिद्धसिद्धान्तपारगैः ॥५॥

ग्रन्थाग्र श्लोक २२००